# Document Information

Text title : brahmANDamohanAkhyaM durgAkavacham
File name : durgaakavach2.itx
Category : kavacha
Location : doc_devii
Author : krRiShNa
Language : Sanskrit
Subject : philosophy/hinduism/religion
Transliterated by : Ravin Bhalekar ravibhalekar at hotmail.com
Proofread by : Ravin Bhalekar ravibhalekar at hotmail.com
Description-comments : brahmavaivartapurANa
Latest update : March 27, 2005
Send corrections to : Sanskrit@cheerful.com
Site access : http://sanskritdocuments.org

# ॥ ब्रह्माण्डमोहनाख्यं दुर्गाकवचम् ॥

श्रीगणेशाय नमः ।
नारद उवाच ।
भगवन्सर्वधर्मज्ञ सर्वज्ञानविशारद ।
ब्रह्माण्डमोहनं नाम प्रकृते कवचं वद ॥ १॥

नारायण उवाच ।
श्रृणु वक्ष्यामि हे वत्स कवचं च सुदुर्लभम् ।
श्रीकृष्णेनैव कथितं कृपया ब्रह्मणे पुरा ॥ २॥

ब्रह्मणा कथितं पूर्वं धर्माय जान्हवीतटे ।
धर्मेण दत्तं मह्यं च कृपया पुष्करे पुरा ॥ ३॥

त्रिपुरारिश्च यद्धृत्वा जघान त्रिपुरं पुरा ।
ममोच ब्रह्मा यद्धृत्वा मधुकैटभयोर्भयात् ॥ ४॥

सञ्जहार रक्तबीजं यद्धृत्वा भद्रकालिका ।
यद्धृत्वा हि महेन्द्रश्च सम्प्राप कमलालयाम् ॥ ५॥

यद्धृत्वा  च महायोद्धा बाणः शत्रुभयङ्करः ।
यद्धृत्वा शिवतुल्यश्च दुर्वासा ज्ञानिनां वरः ॥ ६॥

ॐ दुर्गेति चतुर्थ्यंतः स्वाहान्तो मे शिरोऽवतु ।
मन्त्रः षडक्षरोऽयं च भक्तानां कल्पपादपः ॥ ७॥

विचारो नास्ति वेदे च ग्रहणेऽस्य मनोर्मुने ।
मन्त्रग्रहणमात्रेण विष्णुतुल्यो भवेन्नरः ॥ ८॥

मम वक्रं सदा पातु ॐ दुर्गायै नमोऽन्तकः ।
ॐ दुर्गे इति कण्ठं तु मन्त्रः पातु सदा मम ॥ ९॥

ॐ ह्रीं श्रीमिति मन्त्रोऽयं स्कन्धं पातु निरन्तरम् ।
ह्रीं श्रीं क्लीमिति पृष्ठं च पातु मे सर्वतः सदा ॥ १०॥

ह्रीं मे वक्षस्थले पातु हं सं श्रीमिति सन्ततम् ।
ऐं श्रीं ह्रीं पातु सर्वाङ्गं स्वप्ने जागरणे सदा ॥ ११॥

प्राच्यां मां पातु प्रकृतिः पातु वह्नौ च चण्डिका ।
दक्षिणे भद्रकाली च नैरृत्यां च महेश्वरी ॥ १२॥

वारुण्यां पातु वाराही वायव्यां सर्वमङ्गला ।
उत्तरे वैष्णवी पातु तथैशान्यां शिवप्रिया ॥ १३॥

जले स्थले चान्तरिक्षे पातु मां जगदम्बिका ।
इति ते कथितं वत्स कवचं च सुदुर्लभम् ॥ १४॥

यस्मै कस्मै न दातव्यं प्रवक्तव्यं न कस्यचित् ।
गुरुमभ्यर्च्य विधिवद्वस्त्रालङ्कारचन्दनैः ॥ १५॥

कवचं धारयेद्यस्तु सोऽपि विष्णुर्न संशयः ।
स्नाने च सर्वतीर्थानां पृथिव्याश्च प्रदक्षिणे ॥ १६॥

यत्फलं लभते लोकस्तदेतद्धारणे मुने ।
पञ्चलक्षजपेनैव सिद्धमेतद्भवेद्ध्रुवम् ॥ १७॥

लोके च सिद्धकवचो नावसीदति सङ्कटे ।
न तस्य मृत्युर्भवति जले वह्नौ विषे ज्वरे ॥ १८॥

जीवन्मुक्तो भवेत्सोऽपि सर्वसिद्धीश्वरीश्वरि ।
यदि स्यात्सिद्धकवचो विष्णुतुल्यो भवेद्ध्रुवम् ॥ १९॥

॥ इति श्रीब्रह्मवैवर्ते प्रकृतिखण्डान्तर्गतदुर्गाकवचम् सम्पूर्णम् ॥

Encoded and Proofread by Ravin Bhalekar ravibhalekar@hotmail.com

This text is prepared by volunteers and is to be used for personal study and research. The file is not to be copied or reposted for promotion of any website or individuals or for commercial purpose without permission.

Please help to maintain respect for volunteer spirit.

.. brahmANDamohanAkhyaM durgAkavacham ..
was typeset on July 25, 2016

Please send corrections to *sanskrit@cheerful.com*